वाद्ये, जङ्गमे कल्पपादपे ॥१०॥ यन्मूर्ध्न पश्चि-मेभागे, जितमार्त्तण्डमण्डलम् । माभूद्वपुर्दु रालोक मितीवोत्पिण्डित महः ॥ ११ ॥ स एष योग साम्राज्य-महिमाविश्वविश्रुत. । कर्मक्षयोत्थो भगवन्कस्यनाश्चर्यकारणम् ॥ १२ ॥ अनन्त कालप्रचितमनन्तमपि सर्वथा । त्वत्तो नान्य कर्मकक्षमुन्मूलयति मूलत ॥ १५ ॥ तथोपाये प्रवृत्तस्त्व, क्रियासमभिहारतः । ययानिच्छन्नु-पयेस्य, परा श्रियमशिश्रिय ॥१४॥ मैत्रीपवित्र-पात्राय, मुदितामोदशालिने । कृपोपेक्षाप्रतीक्ष्याय तुभ्य योगात्मने नमः ॥१५॥

इति तृतीय प्रकाश



## चतुर्थ—प्रकाश

मिथ्यादृशा युगान्तार्क', सुदृशाममृताञ्ज-नम् । तिलक तीर्थ कृल्लक्ष्म्या पुरश्चक्रतवैधते

॥ १ ॥ एकोऽयमेव जगति, स्वामीत्याख्यातुमुच्छ्रता। उच्चै रिन्द्रध्वजव्याजात्तर्जनोजंभविद्विषा ॥२॥ यत्रपादोपदंधत्तस्तव तत्र सुरासुराः। मन्ये युगपदाख्यातुं, चतुर्वक्त्रोऽभवद्भवान् ॥ ३ ॥ त्वयिदोषत्रयात्त्रातुं, प्रवृत्ते भुवनत्रयीम् । प्राकारत्रितयं चक्रुस्त्रयो ऽपित्रिदिवौकस: ॥४॥ दान शील तपो भाव भेदाद्धर्म्मं चतुर्विधम्। मन्येयुगपदाख्यातुं, चतुर्वक्त्रोऽभवद्भवान् ॥५॥ अधोमुखा: कण्टका: स्युधार्त्र्यांविहरतस्तव । भवेयु: सम्मुखीना: किंतामसास्तिग्मरोचिष: ।६। केश रोमनखश्मश्रु, तवावस्थितमित्ययम् । वाह्योऽपियोगमहिमा, नाप्तस्तीर्थ करैः परै: ।७। शब्दरूपरससपर्श – गन्धाख्या: पञ्चगोचरा: । भजन्ति प्रातिकूल्यंन, त्वदग्रे तार्किका इव ॥८॥ त्वत्पादावृतव: सर्वे, युगपत्पर्युपासते । आकाल कृतकन्दर्पसाहायक भयादिव । ९॥ सुगन्ध्युदकवर्षेण, दिव्यपुष्पोत्करेण च । भावित्वत्पाद-

सस्पर्शा, पूजयन्ति भुवसुरा ।१०। जगत्प्रतीक्ष्य
त्वायान्ति, पक्षिणोऽपिप्रदक्षिणम् । का गतिर्महता
तेषा त्वयि ये वामवृत्तय. ॥११॥ पञ्चेन्द्रियाणा
दौ। शील्यक्वभवेद्भवदन्तिके ? । एकेन्द्रियोऽपि
यन्मुञ्चत्यनिल। प्रतिकूलताम् ॥१२॥ मूर्ध्नानि-
मन्ति तरवस्त्वन्माहात्म्यचमत्कृता। । तत्कृतार्थं-
शिरस्तेषा, व्यर्थं मिथ्यादृशापुन ।१३। जघन्यतः
कोटिसङ्ख्यास्त्वासेवन्ते सुरासुरा. । भाग्य
सम्भारलभ्येऽर्थे, न मन्दाअप्युदासते.॥१४॥



॥ पञ्चम—प्रकाश-॥

गायन्निवालिविरुतैर् नृत्यन्निवचलैर्दलै । त्वद्-
गुणैरिवरक्तोऽसौ, मोदते चैत्यपादप' ॥ १ ॥
आयोजनसुमनसोऽधस्तान्निक्षिप्तबन्धना । जानु-
दघ्नी। सुमनसो, देशनोर्व्या किरन्ति ते ॥२॥

मालवकैशिकीमुख्यग्रामरागपवित्रितः । तव दिव्योध्वनिः पीतो । हर्षोद्ग्रीवैर्मृगैरपि ।।३।। तवेन्दुधामधवला, चकास्ति चमरावली । हंसालिरिव वक्त्राब्जपरिचर्यापरायणा ।।४।। मृगेन्द्रासनमारूढे, त्वयि तन्वति देशनाम् । श्रोतुं-मृगास्समायान्ति, मृगेन्द्रमिव सेवितुम् ।। ५ ।। भासां चयैः परिवृतो, ज्योत्स्नाभिरिवचन्द्रमाः । चकोराणामिव दृशां, ददासिपरमां मुदम् ।।६।। दुन्दुभिर्विश्व विश्वेश ! पुरोव्योम्निप्रतिध्वनन् । जगत्याप्तेषुते प्राज्यं, साम्राज्यमिवशंसति ।।७।। तवोर्ध्वमूर्ध्वं पुण्यर्द्धिक्रमस ब्रह्मचारिणी । छत्रन्त्रयीत्रिभुवनप्रभुत्वप्रौढिशंसिनी ।। ८ ।। एतां चमत्कारकरीं, प्रातिहार्यश्रियं तव । चित्रीयन्ते न के दृष्ट्वा, नाथ ! मिथ्यादृशोऽपि हि ।।९।।



॥ षष्ठ—प्रकाश ॥

लावण्यपुण्यवपुषि, त्वयि नेत्रामृताञ्जने । माध्यस्थ्यमपि दौ स्थ्याय, किम्पुनर्द्वेषविप्लव ॥ १ ॥ त्वापि प्रतिपक्षोऽस्ति, सोऽपि कोपादिविप्लुत । अनया किंवदन्त्यापि, किं जीवन्ति विवेकिन ॥२॥ विपक्षस्ते विरक्तश्चेत्स त्वमेवाथ रागवान् । न विपक्षो विपक्ष किं खद्योतो द्युतिमालिन ? ॥३॥ स्पृहयन्ति त्वद्योगाय, यत्तेऽपि लवसत्तमा । योगमुद्रादरिद्राणा, परेषा तत्कथैवका ? ॥ ४ ॥ त्वा प्रपद्यामहेनाथ, त्वा स्तुमस्त्वामुपास्महे । त्वत्तो हि न परस्त्राता, किम्ब्रूमः किमु कुर्महे ॥५॥ स्वय मलीम सत्वारै प्रतारणपरै' परै। । वच्यते जगदप्येतत्कस्य पूत्कर्महे पुर ॥६॥ नित्यमुक्तान् जगज्जन्मक्षेमक्षयकृतोद्यमान् । वन्ध्यास्तनन्धयप्रायान्, को देवाश्चेतनः श्रयेत् ॥ ७ ॥ कृतार्थाजठरोपस्थदु स्थितैरपि

दैवतैः । भवादृशान्निह्नुवते, हा हा देवास्तिकाः परे ॥८॥ खपुष्पप्रायमुत्प्रेक्ष्य, किंचिन्मान प्रकल्प्य च । संमान्ति देहे गेहे वा, न गेहे नर्दिनः परे ॥ ६ ॥ कामरागस्नेह रागावीषत्कर निवारणौ । दृष्टिरागस्तु पापीयान्, दुरुच्छेदः सतामपि ॥१०॥ प्रसन्नमास्यं मध्यस्थे, दृशौ लोकम्पृण वचः । इति प्रीतिपदे वाटं, मूढा स्त्वय्यप्युदासते ।११। तिष्ठेद्वायुर्द्रवेद द्रिज्वलेज्जलमपि क्वचित् । तथापि ग्रस्तो रागाद्यै र्नाप्तो भवितुमर्हति ॥ १२ ॥



:: सप्तम—प्रकाश ::

धर्माधर्मौ विना नाङ्ग विनाङ्गेन मुखं कुतः । मुखाद्विना न वक्तृत्वं तच्छास्तारः परे कथम् ? ॥ १ ॥ अदेहस्य जगत्सर्गे प्रवृत्तिरपि

नोचिता । न च प्रयोजन किंचित्स्वातन्त्र्यान्न पराज्ञया ।।२।। क्रीडया चेत्प्रवर्त्तेत रागवान्स्यात्कुमारवत् । कृपयाऽथ सृजेत्तर्हि सुख्येव सकल सृजेत् । ३।। दु ख दौर्गत्य दुर्योनि जन्मादि क्लेश विह्वलम् । जन तु सृजतस्तस्य, कृपालो. का कृपालुता ? ।। ४ ।। कर्मापेक्षस्य चेत्तर्हि न स्वतन्त्रोऽस्मदादिवत् । कर्मजन्ये च वैचित्र्ये किमनेन शिखण्डिना ? ।।५।। अथ स्वभावतो वृत्तिरवितर्क्या महेशितु । परीक्षकाणा तर्ह्येव परीक्षाक्षेपडिण्डम. ।।६।। सर्वभावेपु कर्तृत्व ज्ञातृत्व यदि सम्मतम् । मतंन मन्ति सर्वज्ञा, मुक्ता कायभृतोऽपि च । ७।। सृष्टिवाद कुहेवाकमुन्मुच्येत्यप्रमाणकम् । त्वच्छासनेरमन्ते ते येषा नाथ । प्रसीदसि ।।८।।

—❀—

:: अष्टम—प्रकाश ॥

सत्त्वस्यैकान्तनित्यत्वेकृतनाशा कृतागमौ । स्यातामेकान्तनाशेऽपि, कृतनाशाकृतागमौ ॥१॥ आत्मन्येकान्तनित्ये स्यान्न भोगः सुख दुःखयोः । एकान्तानित्यरूपेऽपि न भोगः सुखदुःखयोः ॥२॥ पुण्यपापे वन्धमोक्षौ, न नित्यैकान्तदर्शने । पुण्य-पापे वन्धमोक्षौ, नानित्यैकान्तदर्शने ॥३॥ क्रमा-क्रमाभ्यांनित्यानां, युज्यतेऽर्थक्रिया नहि । एकान्त क्षणिकत्वेऽपि युज्यतेऽर्थं क्रियानहि ॥४॥ यदातु-नित्यानित्य, स्वरूपतावस्तुनो भवेत् । यथात्थ-भगवन्नैव, तदादोषोऽस्ति कश्चन ॥५॥ गुडो हि कफहेतुः स्यान्नागरं पित्तकारणम् । द्वयात्मनि न दोषोऽस्ति, गुडनागर भेषजे ॥६॥ द्वयं विरुद्धनै-कत्राऽसत्प्रमाणप्रसिद्धितः । विरुद्धवर्ण योगो हि दृष्टो मेचकवस्तुषु ॥ ७ ॥ विज्ञानस्यैकमाकारं, नानाकारकरम्वितम् । इच्छंस्तथागतः प्राज्ञो

नानेकान्त प्रतिक्षिपेत् ॥ ८ ॥ चित्रमेकमनेकच रूपं, प्रामाणिक वदन्। योगोवैशेपिको वापि, नानेकान्त प्रतिक्षिपेन् ॥ ६ ॥ इच्छन्प्रधान सत्वाधै, विरुद्धं गुंम्फित्र गुणैं। साङ्ख्य मख्यावता मुख्यो नानेकान्त प्रतिक्षिपेन् ॥ १० ॥ विमतिस्सम्मतिर्वापि, चार्वाकस्य नमृग्यते। परलोकात्ममोक्षेषु, यस्य मुह्यति शेमुषी ॥११॥ तेनोत्पादव्यवस्थेमसम्भिन्न, गोरसादिवत्। त्वदुपज्ञकृतधिय, प्रपन्नावस्तुतस्तुसत् ॥१२॥



## ❀ नवम्—प्रकाश ❀

यत्राल्पेनापि कालेन, त्वद्भक्ते फलमाप्यते। कलिकाल स एकोस्तु कृत कृतयुगादिभि ॥१॥ सुषमातोदु षमाया, कृपाफनवतो तव। मेरुतो-मरुभूमो हि श्लाघ्या कल्पतरो स्थिति ॥२॥

श्राद्धः श्रोता सुधीर्वक्तायुज्येयातांयदीशतत् । त्व-
च्छासनस्य साम्राज्यमेकच्छत्रंकलावपि ।। ३ ।।
युगान्तरेऽपि चेन्नाथ ! भवन्त्युच्छृङ्खलाः खलाः ।
वृथैव तर्हि कुप्यामः कलयेवामकेलये ।। ४ ।।
कल्याणसिद्धयै साधीयान्, कलिरेवकषोपलः ।
विनाग्निगन्धमहिमा काकतुण्डस्य नैधते ।।५।।
निशि दीपोऽम्बुधौ द्वीपंमरौशाखीहिमे शिखी ।
कलौ दुरापःप्राप्तोऽयं, त्वत्पादाब्जरजः कणः ।६।
युगान्तरेषुभ्रान्तोऽस्मि त्वद्दर्शन विनाकृतः ।
नमोऽस्तु कलये यत्र, त्वद्दर्शनमजायत ।७।। बहु-
दोषो दोषहीनात्त्वत्तः कलिरशोभता । विषयुक्तो-
विषहरात्फणीन्द्र इव रत्नतः ।।८।।



## ❀ दशम—प्रकाश ❀

मत्प्रसत्तेस्त्वत्प्रसादस्त्वत्प्रसादादियं पुनः ।
इत्यन्योन्याश्रयंभिन्धिप्रसीद भगवन् ! मयि ।१।

निरीक्षितु रूपलक्ष्मी, सहस्त्राक्षोऽपि न क्षम । स्वामिन् ! सहस्त्रजिह्वोऽपि शक्तो वक्तु न ते गुणान् ॥२॥ सरायाननाथ ! हरसेऽनुत्तर स्वर्गिणामपि । अत परोऽपि कि कोऽपि गुणास्तुत्योऽस्ति वस्तुत ॥ ३ ॥ इद विरुद्ध श्रद्धत्ता कथमश्रद्दधानकः । आनन्द सुख शक्तिश्च, विरक्तिश्च सम त्वयि ॥ ४ ॥ नाथेय घटयमानापि, दुर्घटा घटता कथम् । उपेक्षा सर्व सत्वेषु परमाचोपकारिता ॥ ५ ॥ द्वय विरुद्ध भगवस्तव, नान्यस्य कस्यचित् । निर्ग्रन्थता परा या च या चोच्चैश्चक्रवर्तिता ॥६॥ नारका अपि मोदन्ते, यस्य कल्याणपर्वसु । पवित्र तस्य चारित्र, को वा वर्णयितु क्षम ॥ ७ ॥ शमोऽद्भुतोऽद्भुत रूप, सर्वात्मसु कृपाद्भुता । सर्वाद्भुतनिधीशाय, तुभ्य भगवते नम ॥८॥



## ❀ एकादश—प्रकाश ❀

निघ्नन्परीषहचमूमुपसर्गान्प्रतिक्षिपन् ।
प्राप्तोऽसिशमसौहित्यं, महतांकापिवैदुषी ॥ १ ॥
अरक्तोभुक्तवान्मुक्तिमद्विष्टोहतवान्द्विषः । अहो
महात्मनांकोऽपि महिमा लोकदुर्लभः ॥ २ ॥
सर्वथानिर्जिगीषेणभीतभीतेन चागसः । त्वया
जगत्त्रयंजिग्ये, महतांकापि चातुरी ॥३॥ दत्तं न
किञ्चित्कस्मैचिन्नात्तंकिञ्चित्कुतश्चन । प्रभुत्वं ते
तथाप्येतत्कला कापिविपश्चिताम् ॥४॥ यद्देह-
स्यापि दानेन, सुकृतंनार्जितं परैः । उदासीनस्य
तन्नाथ ! पादपीठे तवालुठत् ॥ ५ ॥ रागादिषु
नृशसेन, सर्वात्मसु कृपालुना । भीमकान्तगुणेनो-
च्चैः साम्राज्यंसाधित त्वया ॥६॥ सर्वे सर्वात्म-
नाऽन्येषु, दोषास्त्वयि पुनर्गुणाः । स्तुतिस्तवेयं
चेन्मिथ्या, तत्प्रमाणं सभासदः ॥ ७ ॥ महीय-
सामपिमहान्महनीयोमहात्मनाम् । अहो मे स्तु-
वतः, स्वामी स्तुतेर्गोचरमागमत् ॥८॥

## ॐ द्वादश—प्रकाश ॐ

पट्वभ्यासादरै पूर्वं तथा वैराग्यमाहर ।
यथेह जन्मन्याजन्म तत्सात्मीभावमागमत् ॥१॥
दुःखहेतेषु वैराग्यं न तथा नाथ ! निस्तुषम् ।
मोक्षोपाय प्रवीणस्य यथाते सुखहेतेषु ॥ २ ॥
विवेकशाणैर्वैराग्यशस्त्रंशात त्वया तथा । यथा-
मोक्षेऽपि तत्साक्षादकुंठित पराक्रमम् ॥३॥ यदा
मरुन्नरेन्द्र श्रीस्त्वय नाथोपभुज्यते । यत्रतत्र
रतिर्नामि, विरक्तत्व तदापि ते ॥ ४ ॥ नित्य
विरक्त कामेभ्यो यदा योगप्रपद्यते । अलमेभिरि-
तिप्राज्य तदा वैराग्यमस्तिते ॥५॥ सुखेदुःखेभवे-
मोक्षेयदौदासीन्यमीशिषे । तदा वैराग्यमेवेति
कुत्र नासि विरागवान् ॥६॥ दुःखगर्भे मोहगर्भे
वैराग्येनिष्ठिता. परे । ज्ञानगर्भंतुवैराग्य त्वय्ये-
कायनता गतम् ॥ ७ ॥ औदासीन्येऽपि सतत
विश्व विश्वोपकारिणे । नमो वैराग्यनिघ्नाय
तायिने परमात्मने ॥८॥

## ❀ त्रयोदश—प्रकाश ❀

अनाहूतसहायस्त्वं, त्वम कारणवत्सल: । अनभ्यर्थितसाधुस्त्वं, त्वमसम्बन्धबान्धव ।। १ ।। अनक्तस्निग्धमनसममृजोज्ज्वलवाक्पथम् । अधोतामलशीलं त्वांशरण्यंशरणं श्रये ।।२।। अचण्डवीरवृत्तिनाशमिना शमवर्त्तिना । त्वया काममकुट्यन्त कुटिला: कर्मकण्टका: ।।३।। अभवाय महेशायागदाय नरकच्छिदे । अराजसाय ब्रह्मणे कस्मैचिद्भवते नमः ।।४।। अनुक्षितफलोदग्राद निपात गरीयस: । असङ्कल्पितकल्पद्रोस्त्वत्त:फलमवाप्नुयाम ।।५।। असङ्गस्य जनेशस्यनिर्ममस्य कृपात्मन: । मध्यस्थस्य जगत्त्रातुरनङ्कस्तेऽस्मिकिङ्कर: ।।६।। अगोपिते रत्ननिधावव‍ृते कल्पपादपे । अचिन्त्ये चिन्तारत्ने च त्वय्यात्मायंमयार्पित: ।।७।। फलानुध्यानवन्ध्योऽहं, फलमात्रतनुर्भवान् । प्रसीद यत्कृत्यविधौ, किंकर्तव्य जडे मयि ।। ८ ।।

## ❀ चतुर्दश—प्रकाश ❀

मनोवच कायचेष्टा कष्टा। महत्य सर्वथा।
श्लथत्वेनैवभवतामन शल्य वियोजितम् ॥१॥
सयतानि न चाक्षाणि नैवोच्छृङ्खलितानि च।
इति सम्यक्प्रतिपदा त्वयेन्द्रियजय कृत ॥२॥
योगस्याष्टाङ्गता नून प्रपञ्च: कथमन्यथा।
आबालभावतोप्येष तवसात्म्यमुपेयिवान् ॥३॥
विषयेषुविरामस्ते चिरसहचरेष्वपि। योगे
सात्म्यमदृष्टेऽपि स्वामिन्निदमलौकिकम् ॥ ४ ॥
तथा परेन रज्यन्ते उपकार परे परे। यथाऽप-
कारिणिभवानहो सर्वमलौकिकम् ॥५॥ हिंसका
अप्युपकृता आश्रिता अप्युपेक्षिता। इद चित्र
चरित्र ते के वा पर्यनुयुञ्जताम् ॥ ६ ॥ तथा
समाधौ परमेत्वयात्माविनिवेशित सुखीदु स्यस्मि
नास्मीतियथान प्रतिपन्नवान् ॥ ७ ॥ ध्याताध्येय
तथा ध्यान त्रयमेकात्मता गतम्। इतिते योग-
माहात्म्य कथश्रद्धीयता परै:।

❀ पञ्चदश—प्रकाशः ❀

जगज्जेत्रागुणास्त्रातरन्ये तावत्तवासताम् ।
उदात्तशान्तया जिग्येमुद्रयैव जगत्त्रयी ।१। मेरु-
स्तृणीकृतोमोहात्पयोधिर्गोष्पदीकृतः । गरिष्ठेभ्यो
गरिष्ठो यैःपाप्मभिस्त्वमपोहितः ।। २ ।। च्युत-
श्चिन्तामणिः पाणेस्तेषां लब्धा सुधा मुधा ।
यैस्त्वच्छासनसर्वस्वमज्ञानैर्नात्मसात्कृतम् ।। ३ ।।
यस्त्वय्यपि दधौ दृष्टिमुल्मुकाकारधारिणीम् ।
तमाशुशुक्षणिः साक्षादालप्याल मिदं हि वा ।४।
त्वच्छासनस्य साम्यं ये मन्यन्ते शासनान्तरैः ।
विषेण तुल्यं पीयूष, तेषां हन्त हतात्मनाम् ।।५।।
अनेऽमूकाभूया सुस्ते येषां त्वयिमत्सरः । शुभो-
दर्कायवैकल्यमपिपापेषु कर्मसु ।।६।। तेभ्यो नमो-
ऽञ्जलिरयं तेषां तान्समुपास्महे । त्वच्छासनामृत
रसैर्यैरात्माऽसिच्यतान्वहम् ।। ७ ।। भवे तस्यै
नमोयस्यां तव पादनखांशवः । चिरंचूडामणी-

यन्ते ब्रूमहे किमत परम् ॥ ८ ॥ जन्मवानस्मि धन्योऽस्मि कृतकृत्योस्मि यन्मुहु । जातोऽस्मि त्वद् गुण ग्रामरामणीयकलम्पट ॥९॥



## ❀ षोडश—प्रकाश ❀

त्वन्मतामृतपानोत्थाइत शमरसोर्मय ।
पराणयन्तिमा नाथ ! परमानन्दसम्पदम् ॥१॥
इतश्चानादिसंस्कारमूर्च्छितो मूर्च्छयत्यलम् ।
रागोरग विषावेगो हताश करवाणि किम् ?
॥२॥ रागाहिगरलाघ्रातोऽकार्यंथत्कर्मवैशमम् ।
तद्वक्तुमप्यशक्तोऽस्मिधिङ्मेप्रच्छन्नपापताम् ।३।
क्षण सक्त क्षण मुक्त क्षण क्रुद्ध क्षण क्षमी ।
मोहाद्यै . क्रोडयैवाह कारित कपिचापलम् ॥४॥
प्राप्यापि तव सम्बोधि मनोवाक्कायकर्मजे ।
दुश्चेष्टितैर्मया नाथ ! शिरसि ज्वालितोऽनलः

।५। त्वय्यपि त्रातरि त्रातर्यन्मोहादिमलिम्लुचैः ।
रत्नत्रयं मे ह्रियते हताशो हा हतोऽस्मि तत् ।६।
भ्रान्तस्तीर्थानि दृष्टस्त्वं मयैकस्तेषु तारकः ।
तत्तवाङ्घ्रौ विलग्नोऽस्मि नाथ ! तारय तारय
।।७।। भवत्प्रसादेनैवाहमियतीं प्रापितो भुवम् ।
औदासीन्येन नेदानीं तव युक्तमुपेक्षितुम् ।।८।।
ज्ञाता तात त्वमेवैकस्त्वत्तो नान्यः कृपापरः ।
नान्योमतः कृपापात्रमेधि यत्कृत्यकर्मठः ।।९।।



## ❀ सप्तदश—प्रकाशः ❀

स्वकृतं दुष्कृतं गर्हन् सुकृतं चानुमोदयन् ।
नाथ ! त्वच्चरणौ यामि शरणं शरणोज्झितः
।।१।। मनोवाक्कायजे पापे कृतानुमतिकारितैः ।
मिथ्या मे दुष्कृतं भूयादपुनः क्रिययान्वितम् ।२।
यत्कृतं सुकृतं किंचिद्रत्नत्रितय गोचरम् । तत्सर्व-

मनुमन्येऽहं मार्गमात्रानुसार्यपि ॥ ३ ॥ सर्वेषा-
मर्हदादीनां यो योऽर्हत्त्वादिको गुणः । अनुमोद-
यामि तं तं सर्वं तेषां महात्मनाम् ॥४॥ त्वां
त्वत्फलभूतान्सिद्धांस्त्वच्छासनरतान्मुनीन् । त्व-
च्छासनं च शरणं प्रतिपन्नोऽस्मि भावतः ॥५॥
क्षमयामि सर्वान्सत्त्वान्सर्वे क्षाम्यन्तु ते मयि ।
मैत्र्यस्तु तेषु सर्वेषु त्वदेकशरणस्य मे ॥६॥
एकोऽहं नास्ति मे कश्चिन्न चाहमपि कस्यचित् ।
त्वदङ्घ्रिशरणस्थस्य मम दैन्यं न किञ्चन ॥७॥
यावन्नाप्नोमि पदवीं परां त्वदनुभावजाम् ।
तावन्मयि शरण्यत्वं मा मुञ्च शरणं श्रिते ॥८॥



## ❀ अष्टादश—प्रकाशः ❀

न परं नाममृद्वेव कठोरमपि किञ्चन ।
विशेषज्ञायविशष्य स्वामिने स्वान्तशुद्धये ॥१॥

न पक्षिपशुसिंहादिवाहनासीन विग्रहः ।
न नैत्रगात्रवक्त्रादि विकार विकृताकृतिः ॥२॥
न शूलचापचक्रादि शस्त्राङ्ककर पल्लवः ।
नाङ्गनाकमनीयाङ्ग परिष्वङ्ग परायणः ॥३॥
न गर्हणीय चरितप्रकम्पित महाजनः ।
न प्रकोप प्रसादादिविडम्बित नरामरः ॥४॥
न जगज्जननस्थेमविनाशविहितादरः ।
न लास्य हास्य गीतादिविप्लवोपप्लुतस्थितिः ।५।
तदेवं सर्वदेवेभ्यस्सर्वथा त्वंविलक्षणः ।
देवत्वेन प्रतिष्ठाप्यः कथं नाम परीक्षकैः ॥६॥
अनुश्रोतः सरत्पर्णतृण काष्ठादियुक्तिमत् ।
प्रतिश्रोतः श्रयद्वस्तु कया युक्त्या प्रतीयताम् ।७।
अथवाऽलंमदबुद्धि परीक्षकपरीक्षणैः ।
ममापि कृतमेतेनवैयात्येन जगत्प्रभो ॥८॥
यदेव सर्व संसारिजन्तु रूप विलक्षणम् ।
परीक्षन्तां कृतधियस्तदेव तव लक्षणम् ॥९॥

क्रोधलोभभयाक्रांत जगदस्माद्विलक्षणः ।
न गोचरोमृदुधियावीतराग ! कथञ्चन ॥१०॥

-❀-

❀ एकोनविंशतितम्—प्रकाश ❀

तव चेतसि वर्तेऽहमिति वार्तापि दुर्लभा ।
मच्चित्ते वर्तसे चेत्त्वमलमन्येन केनचित् ॥१॥
निगृह्यकोपतः कांश्चित् कांश्चित्तुष्ट्यानुगृह्य च ।
प्रतार्यन्ते मृदुधियः प्रलम्भनः परैः परैः ॥२॥
अप्रसन्नात्कथं प्राप्यं फलमेतदसंगतम् ।
चिंतामण्यादयः किं न फलन्त्यपि विचेतनाः ।३।
वीतराग ! सपर्यायास्तवाज्ञापालनं परम् ।
आज्ञाराद्धाविराद्धा च शिवाय च भवाय च ॥४॥
आकालमियमाज्ञा ते हेयोपादेय गोचरा ।
आश्रवः सर्वथा हेय उपादेयश्च संवरः ॥५॥

आश्रवोभवहेतुः स्यात्संवरो मोक्षकारणम् ।
इतीय मार्हती मुष्टिरन्यदस्याः प्रपञ्चनम् ।।६।।

इत्याज्ञाराधनपरा अनन्ताः परिनिर्वृताः ।
निर्वान्ति चान्ये क्वचननिर्वास्यन्ति तथापरे ।७।।

हित्वाप्रसादनादैन्यमेकयैव त्वदाज्ञया ।
सर्वथैव विमुच्यन्ते जन्मिनः कर्मपञ्जरात् ।।८।।



## ❀ विंशतितम्—प्रकाश ❀

पादपीठलुठन्मूर्ध्नि मयि पादरजस्तव ।
चिरंनिवसतां पुण्यपरमाणुकणोपमम् ।। १ ।।

मदृशौ त्वन्मुखा सक्ते, हर्षबाष्पजलोर्मिभिः ।
अप्रेक्ष्यप्रेक्षणोद्भूतं क्षणात्क्षालयतांमलम् ।।२।।

त्वत्पुरोलुठनैर्भूयान्मद्भालस्य तपस्विनः ।
कृतासेव्यप्रणामस्य प्रायश्चित्तं किणावलिः ।।३।।

ममत्वद्दर्शनोद्भूताश्चिर रोमाञ्च कण्टका ।
दुदन्ता चिरकालोत्थामसद्दर्शनवासनाम् ॥४॥

त्वद्वक्त्रकान्तिज्योत्स्नासु निपीतासु सुधास्विव ।
मदीयैर्लोचनाम्भोजैः प्राप्यतानिर्निमेषता ॥५॥

त्वदास्यलासिनी नेत्रे त्वदुपास्तिकरौ करौ ।
त्वद्गुण श्रोतृणी श्रोत्रे भूयास्तां सर्वदा मम ॥६॥

कुण्ठापियदिसोत्कण्ठा त्वद्गुणग्रहणं प्रति ।
ममैषाभारतीतर्हि स्वस्त्यै तस्यैकिमन्यया ॥७॥

तव प्रेष्योऽस्मिदासोऽस्मि सेवकोऽस्म्यस्मिकिंकर ।
ओमितिप्रतिपद्यस्व नाथ ! नातः परं ब्रुवे ॥८॥

श्री हेमचन्द्र प्रभवाद्वीतरागस्तवादित ।
कुमारपालभूपाल प्राप्नोतु फलमीप्सितम् ॥९॥

—ॐ इति विंशतितम प्रकाश ॐ—



# :: श्री तत्त्वार्थाधिगमसूत्रम् ::

## ❀ प्रथमोऽध्यायः ❀

१. सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः। २ तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् । ३. तन्निसर्गादधिगमाद्वा । ४. जीवाजीवाश्रव–बन्ध–संवर–निर्जरा–मोक्षास्तत्त्वम् । ५. नामस्थापनाद्रव्य-भावतस्तन्न्यासः । ६. प्रमाणनयैरधिगमः । ७. निर्देशस्वामित्व–साधनाधिकरण–स्थिति- विधानतः । ८. सत्संख्याक्षेत्र-स्पर्शन-कालान्तर-भावाल्पबहुत्वैश्च । ९. मतिश्रुतावधिमनःपर्यय-केवलानि ज्ञानम् । १०. तत्प्रमाणे । ११. आद्ये परोक्षम् । १२. प्रत्यक्षमन्यत् । १३. मतिः स्मृतिः संज्ञा चिन्ताऽऽभिनिबोध इत्यनर्थान्तरम् । १४. तदिन्द्रियानिन्द्रियनिमित्तम् । १५. अवग्रहेहापाय-धारणाः । १६. बहुबहुविधक्षिप्रानिश्रितानुक्त-

ध्रुवाणां सेतराणाम् । १७ अर्थस्य । १८ व्यञ्जनस्यावग्रहः । १९ न चक्षुरनिन्द्रियाभ्याम् । २० श्रुतं मतिपूर्वं, द्व्यनेकद्वादशभेदम् । २१ २१ द्विविधोऽवधिः । २२ भवप्रत्ययो नारकदेवानाम् । २३ यथोक्तनिमित्तः षड्विकल्पः शेषाणाम् । २४ ऋजुविपुलमती मनःपर्यायः । २५. विशुद्ध्यप्रतिपाताभ्यां तद्विशेषः । २६ विशुद्धि-क्षेत्र-स्वामि-विषयेभ्योऽवधिमनःपर्याययोः । २७ मति श्रुतयोर्निबन्धः सर्वद्रव्येष्वसर्वपर्यायेषु । २८ रूपिष्ववधेः । २९ तदनन्तभागे मनःपर्यायस्य । ३० सर्वद्रव्यपर्यायेषु केवलस्य । ३१ एकादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः । ३२ मतिश्रुतावधयो विपर्ययश्च । ३३ सदसतोरविशेषाद्यदृच्छोपलब्धेरुन्मत्तवत् । ३४ नैगमसंग्रह-व्यवहार र्जुसूत्र-शब्दा नयाः । ३५ आद्यशब्दौ द्वित्रिभेदौ ।

— ❀ —

## ❀ अथ द्वितीयोऽध्यायः ❀

१. औपशमिक-क्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्व-मौदयिक-पारिणामिकौ च । २. द्विनवाष्टादशैकविंशतित्रिभेदा यथाक्रमम् । ३ सम्यक्त्वचारित्रे । ४. ज्ञान-दर्शन-लाभ-भोगोपभोग-वीर्याणि च ५. ज्ञानाज्ञान-दर्शन-दानादिलब्धयश्चतुस्त्रित्रिपंचभेदा. सम्यक्त्वचारित्र संयमासंयमाश्च । ६. गति-कषाय-लिंग-मिथ्या-दर्शना-ज्ञाना-संयता-सिद्धत्वलेश्याश्चतुश्चतुस्त्र्येकैकैकैकषड्भेदाः । ७. जीवभव्याभव्यत्वादीनि च । ८. उपयोगो लक्षणम् । ९. स द्विविधोऽष्ट-चतुर्भेदः । १०. संसारिणो मुक्ताश्च । ११. समनस्कामनस्काः । १२. संसारिणस्त्रसस्थावराः । १३. पृथिव्यब्वनस्पतयः स्थावराः । १४. तेजोवायूद्वीन्द्रियादयश्च त्रसाः । १५. पंचेन्द्रियाणि । १६. द्विविधानि । १७. निर्वृत्युपकरणे द्रव्येन्द्रि-

यम् । १८ लब्ध्युपयोगौ भावेन्द्रियम् । १९ उपयोग स्पर्शादिषु । २० स्पर्शनरसनघ्राणचक्षु श्रोत्राणि । २१ स्पर्श-रस-गन्ध-वर्ण-शब्दास्तेषामर्थाः । २२ श्रुतमनिन्द्रियस्य । २३ वाय्वन्तानामेकम् । २४ कृमि-पिपीलिकाभ्रमरमनुष्यादीनामेकैकवृद्धानि । २५ सज्ञिन समनस्काः । २६ विग्रहगतौ कर्मयोग । २७ अनुश्रेणि गतिः । २८ अविग्रहा जीवस्य । २९ विग्रहवती च ससारिण प्राक् चतुर्भ्यं । ३० एकसमयोऽविग्रहः । ३१ एक द्वौ वाऽनाहारकः । ३२ सम्मूर्च्छनगर्भोपपाता जन्म । ३३ सचित्तशीत-सवृत्ता: सेतरा मिश्राश्चैकशस्तद्योनय । ३४ जराय्वण्डपोनजाना गर्भ । ३५ नारकदेवानामुपपात । ३६ शेषाणा सम्मूर्च्छनम् । ३७ औदारिकवैक्रियाहारकतैजसकार्मणानि शरीराणि । ३८ पर पर सूक्ष्मम् । ३९ प्रदेशतोऽसङ्ख्येयगुण प्राक् तैजसात् । ४० अनन्तगुणे परे ।

४१ अप्रतिघाते । ४२ अनादिसम्बन्धे च । ४३ सर्वस्य । ४४ तदादीनि भाज्यानि युगपदेकस्याऽऽचतुर्भ्यः । ४५ निरुपभोगमन्त्यम् । ४६ गर्भसम्मूर्च्छनजमाद्यम् । ४७ वैक्रियमौपपातिकम् । ४८ लब्धिप्रत्ययं च । ४९ शुभं विशुद्धमव्याघाति चाहारकं चतुर्दशपूर्वधरस्यैव । ५० नारकसम्मूर्च्छिनो नपुंसकानि । ५१ न देवाः । ५२ औपपातिक-चरमदेहोत्तमपुरुषाऽसङ्ख्येयवर्षायुषोऽनपवर्त्यायुषः ।



## ❀ अथ तृतीयोऽध्यायः ❀

१ रत्नशर्करावालुकापंकधूमतमोमहातमःप्रभा भूमयो घनाम्बुवाताकाशप्रतिष्ठाः सप्ताधोऽधः पृथुतराः । २ तासु नरकाः । ३ नित्याशुभतर-लेश्या-परिणाम-देहवेदना-विक्रियाः । ४ परस्प-

रोदीरितदु खा। ५ सविलष्टासुरोदीरितदु खाश्च प्राक्चतुर्थ्या । ६ तेष्वेक-त्रि-सप्त-दश-सप्तदश-द्वाविंशति-त्रयस्त्रिंशत्-सागरोपमा सत्वाना परा स्थिति । ७ जम्बूद्वीपलवणादय शुभनामानो द्वीपसमुद्रा । ८ द्विर्द्विविष्कम्भा पूर्वपूर्वपरिक्षेपिणो वलयाकृतय । ९ तन्मध्ये मेरुनाभिर्वृत्तो योजनशतसहस्रविष्कम्भो जम्बूद्वीप । १० तत्र भरतहैमवतहरिविदेहरम्यकहैरण्यवतैरावत वर्षा क्षेत्राणि । ११ तद्विभाजिन पूर्वपरायताहिमवन्महा-हिमवन्निषधनीलरुक्मिशिखरिणो वर्षधरपर्वता । १२ द्विर्धातकीखण्डे । १३ पुष्करार्धे च । १४ प्राग्मानुषोत्तरान्मनुष्या । भरतैरावत-विदेहा कर्मभूमयोऽन्यत्र देवकुरूत्तरकुरुभ्य । १७ नृस्थिती परापरे त्रिपल्योपमान्तर्मुहूर्ते । १८ तिर्यग्योनीना च ।



## ❀ अथ चतुर्थोऽध्यायः ❀

१ देवाश्चतुर्निकायाः । २ तृतीयः पीतलेश्यः । ३ दशाष्टपंचद्वादशविकल्पाः कल्पोपपन्नपर्यन्ताः । ४ इन्द्रसामानिकत्रायस्त्रिंश-पारिषद्यात्मरक्ष-लोकपालानीक-प्रकीर्णकाभियोग्यकिल्विषिकाश्चैकशः । ५ त्रायस्त्रिंशलोकपालवर्ज्या व्यन्तरज्योतिष्काः । ६ पूर्वयोर्द्वीन्द्राः । ७ पीतान्तलेश्याः । ८ कायप्रवीचारा आ ऐशानात् । ९ शेषाः स्पर्शरूपशब्दमनःप्रवीचाराद्वयोर्द्वयोः । १० परेऽप्रवीचाराः । ११ भवनवासिनोऽसुर-नागविद्युत्सुपर्णाग्नि–वात – स्तनितोदधि–द्वीपदिक्कु – माराः । १२ व्यन्तराःकिन्नरकिम्पुरुषमहोरगगन्धर्वयक्षराक्षसभूतपिशाचाः । १३ ज्योतिष्काः सूर्याश्चन्द्रमसो ग्रहनक्षत्रप्रकीर्णतारकाश्च । १४ मेरुप्रदक्षिणा नित्यगतयो नृलोके । १५ तत्कृतः कालविभागः । १६ वहिरवस्थिताः । १७ वैमा-

निका । १८ कल्पोपपन्ना कल्पातीताश्च । १९ उपर्युपरि । २० सौधर्मैशान-सानत्कुमार-माहेन्द्र-ब्रह्मलोक-लान्तक-महाशुक्र-सहस्रारेष्वानतप्राणतयोरारणाच्युतयोर्नवसु ग्रैवेयकेषु विजय-वैजयन्त-जयन्तापराजितेषु सर्वार्थसिद्धे च । २१ स्थिति प्रभाव-सुख-द्युति-लेश्या-विशुद्धीन्द्रियावधिविषयतोऽधिका । २२ गति-शरीर-परिग्रहाभिमानतो हीना । २३ पीत-पद्म-शुक्ललेश्या द्वि-त्रि-शेषेषु । २४ प्राग्ग्रैवेयकेभ्य कल्पा । २५ ब्रह्मलोकालया लोकान्तिका । २६ सारस्वतादित्यवह्न्यरुण-गर्दतोय-तुषिता-व्याबाध-मरुत (अरिष्टा) । २७ विजयादिषु द्विचरमा । २८ औपपातिकमनुष्येभ्य शेषास्तिर्यग्योनय । २९ स्थिति । ३० भवनेषु दक्षिणार्धाधिपतीना पल्योपममध्यर्धम । ३१ शेषाणा पादोने । ३२ असुरेन्द्रयो सागरोपममधिक च । ३३ सौधर्मादिषु यथाक्रमम् । ३४ सागरोपमे ।

३५ अधिके च। ३६ सप्त सानत्कुमारे। ३७ विशेषत्रि-सप्त-दशैकादश-त्रयोदश-पंचदश-भिरधिकानि च। ३८ आरणाच्युतादूर्ध्वमेकैकेन नवसु ग्रैवेयकेषु विजयादिषु सर्वार्थसिद्धे च ३९ अपरा पल्योपममधिकं च। ४० सागरोपमे। ४१ अधिके च। ४२ परतः परतः पूर्वा पूर्वानन्तरा। ४३ नारकाणां च द्वितीयादिषु। ४४ दशवर्षसहस्राणि प्रथमायाम्। ४५ भवनेषु च। ४६ व्यन्तराणां च। ४७ परा पल्योपमम्। ४८ ज्योतिष्काणामधिकम्। ४९ ग्रहाणामेकम्। ५० नक्षत्राणामर्धम्। ५१ तारकाणां चतुर्भागः परा जघन्या त्वष्टभागः। ५३ चतुर्भागः शेषाणाम्।

❀ ❀

## ॐ अथ पञ्चमोऽध्याय ॐ

१ अजीवकाया धर्माधर्माकाशपुद्गला. । २ द्रव्याणि जीवाश्च । ३ नित्यावस्थितान्यरूपाणि । ४ रूपिण पुद्गला । ५ आऽऽकाशादेकद्रव्याणि । ६ निष्क्रियाणि च । ७ असंख्येया प्रदेशा धर्माधर्मयो । ८ जीवस्य च । ९ आकाशस्यानन्ता । १० संख्येयासंख्येयाश्च पुद्गलानाम् । ११ नाणो । १२ लोकाकाशेऽवगाह । १३ धर्माधर्मयो कृत्स्ने । १४ एकप्रदेशादिषु भाज्य पुद्गलानाम् । १५ असंख्यभागादिषु जीवानाम् । १६ प्रदेशसंहारविसर्गाभ्या प्रदीपवत् । १७ गतिस्थित्युपग्रहो धर्माधर्मयोरुपकार । १८ आकाशस्यावगाह । १९ शरीरवाङ्मन -प्राणापाना पुद्गलानाम् । २० सुखदु खजीवितमरणोपग्रहाश्च । २१ परस्परोपग्रहो जीवानाम् । २२ वर्तना परिणाम क्रिया परत्वापरत्वे

च कालस्य । २३ स्पर्शरसगन्धवर्णवन्तः पुद्गला । २४ शब्द-बन्ध-सौक्ष्म्य-स्थौल्य-संस्थान-भेद-तम-श्छायातपोद्योतवन्तश्च । २५ अणवः स्कन्धाश्च, २६ संघातभेदेभ्य उत्पद्यन्ते । २७ भेदादणुः । २८ भेदसंघाताभ्यां चाक्षुषाः । २९ उत्पाद-व्यय-ध्रौव्ययुक्तं सत् । ३० तद्भावाव्ययं नित्यम् । ३१ अर्पितानर्पितसिद्धेः । ३२ स्निग्धरुक्षत्वाद्-बन्धः । ३३ न जघन्यगुणानाम् । ३४ गुणसाम्ये सदृशानाम् । ३५ द्व्यधिकादिगुणानां तु । ३६ बन्धे समाधिकौ पारिणामिकौ । ३७ गुणपर्यय-वद् द्रव्यम् । ३८ कालश्चेत्येके । ३९ सोऽनन्त-समयः । ४० द्रव्याश्रया निर्गुणा गुणाः । ४१ तद्भावः परिणामः । ४२ अनादिरादिमांश्च । ४३ रूपिष्वादिमान् । ४४ योगोपयोगौ जीवेषु ।

❀ ❀

## ❀ अथ षष्ठोऽध्याय ❀

१ कायवाङ्मन कर्मयोग । २ स आस्रव ३ शुभ पुण्यस्य । ४ अशुभ पापस्य । ५ सकषायाकषाययो साम्परायिकेर्य्यापथयो । ६ अव्रत-कषायेन्द्रिय-क्रिया पच-चतु.-पच-पचविंशति-सख्या पूर्वस्य भेदा । ७ तीव्रमन्द-ज्ञाताज्ञात-भाववीर्य्याधिकरणविशेषेभ्यस्तद्विशेष । ८ अधिकरण जीवाजीवा । ६ आद्य सरम्भसमारम्भारम्भ-योग-कृतकारितानुमत-कषायविशेषैस्त्रिस्त्रि-स्त्रिश्चतुश्चैकश । १० निर्वर्तनानिक्षेपसयोगनिसर्गा द्विचतुर्द्वित्रिभेदा परम् । ११ तत्प्रदोष-निह्नवमात्सर्या-तराया-सादनोपघाता दर्शनावरणयो । १२ दु ख शोक-तापा-क्रन्दन-वध-परिदेवनान्यात्मपरोभयस्थान्यसद्वेद्यस्य । १३ भूत-व्रत्यनुकम्पादान सरागसयमादियोग क्षान्ति. शौचमिति सद्वेद्यस्य । १४ केवलि-श्रुत-सघ-

धर्म-देवावर्णवादो दर्शनमोहस्य। १५ कषायो-
दयात्तीव्रात्मपरिणामश्चारित्रमोहस्य। १६ वह्वा-
रम्भपरिग्रहत्वं च नारकस्यायुषः। १७ माया
तैर्यग्योनस्य। १८ अल्पारम्भपरिग्रहत्वं स्वभाव-
मार्दवार्जवं. च मानुषस्य। १९ नि शीलव्रतत्वं
च सर्वेषाम्। २० सरागसंयम–संयमासंयमा–
कामनिर्जरा-बालतपांसि दैवस्य। २१. योगव-
क्रता विसंवादनं चाशुभस्य नाम्नः। २२ विप-
-रीतं शुभस्य। २३ दर्शनविशुद्धिर्विनयसंपन्नता-
शीलव्रतेष्वनतिचारो–ऽभीक्ष्णं ज्ञानोपयोगसंवेगौ
-शक्तितस्त्यागतपसी संघ-साधुसमाधि-वैयावृत्य-
करणमर्हदाचार्य-बहुश्रुतप्रवचनभक्ति-रावश्यका-
परिहाणि–मार्गप्रभावना – प्रवचनवत्सलत्वमिति
तीर्थंकृत्त्वस्य। २४ परात्मनिन्दाप्रशंसे सदसद्-
गुणाच्छादनोद्भावने च नीचैर्गोत्रस्य। २५ तद्वि-
पर्ययो नीचैर्वृत्त्यनुत्सेकौ चोत्तरस्य। २६ विघ्न-
करणमन्तरायस्य।

## ❀ अथ सप्तमोऽध्याय ❀

१ हिंसाऽनृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रतम् । २ देशसर्वतोऽणुमहती । ३ तत्स्थैर्यार्थं भावना पञ्च पञ्च । ४ हिंसादिष्विहामुत्र चापायावद्यदर्शनम् । ५ दुःखमेव वा । ६ मैत्रीप्रमोद-कारुण्य-माध्यस्थ्यानि सत्त्व-गुणाधिक-क्लिश्य-मानाविनयेषु, जगत्कायस्वभावौ च संवेगवैराग्यार्थम् । ८ प्रमत्तयोगात्प्राणव्यपरोपणं हिंसा । ९ असदभिधानमनृतम् । १० अदत्तादानं स्तेयम् । ११ मैथुनमब्रह्म । १२ मूर्च्छा परिग्रहः । १३ निःशल्यो व्रती । १४ अगार्यनगारश्च । १५ अणुव्रतोऽगारी । १६ दिग्देशानर्थदण्डविरति-सामायिक-पौषधोपवासोपभोगपरिभोगा-तिथिसंविभागव्रतसंपन्नश्च । १७ मारणान्तिकीं संलेखनां जोषिता । १८ शङ्काकाङ्क्षाविचिकित्साऽन्यदृष्टि-प्रशंसा-संस्तवाः सम्यग्दृष्टेरतिचाराः । १९ व्रत-

शीलेषु पंच पंच यथाक्रमम् । २० बन्ध-वध-च्छविच्छेदातिभारारोपणान्नपाननिरोधाः । २१ मिथ्योपदेश-रहस्याभ्यान-कुटलेखक्रियान्यासापहारमन्त्रभेदाः । २२ स्तेनप्रयोगतदाहृतादान-विरुद्धराज्यातिक्रमहीनाधिकमानोन्मान-प्रतिरूपकव्यवहाराः । २३ परविवाहकरणे-त्वरपरिगृहीता-परिगृहीतागमना-नगक्रीडा-तीव्रकामाभिनिवेशाः । २४ क्षेत्रवास्तु-हिरण्यसुवर्ण-धन-धान्य-दासीदास-कुप्यप्रमाणातिक्रमाः । २५ ऊर्ध्वाधिस्तिर्यग्व्यतिक्रमक्षेत्रवृद्धि-स्मृत्यन्यधर्नानि २६ आनयन-प्रेष्यप्रयोग-शब्द-रूपानुपात-पुद्गल-क्षेपाः । २७ कन्दर्प-कौकुच्य-मौखर्या-समीक्ष्याधिकरणो-पभोगाधिकत्वानि । २८ योगदुष्प्रणिधानानादर-स्मृत्यनुपस्थापनानि । २९ अप्रत्यवेक्षितापमार्जितोत्सर्गादाननिक्षेपसंस्तारोपक्रमणानादर-स्मृत्यनुपस्थापनानि । ३० सचित्त-सबद्ध-संमिश्रा-भिषव-दुष्पक्वाहाराः । ३१ सचित्त-

निक्षेप पिधान-परव्यपदेश-मात्सर्य-कालातिक्रमाः ३२ जीवितमरणाशंसा-मित्रानुराग-सुखानुबन्ध-निदानकरणानि । ३३ अनुग्रहार्थं स्वस्यातिसर्गो दानम् । ३४ विधि-द्रव्य-दातृ-पात्रविशेषात्त-द्विशेषः ।



## ॐ अथ अष्टमोऽध्याय ॐ

१ मिथ्यादर्शना-विरति-प्रमाद-कषाय-योगा बन्ध-हेतवः । २ सकषायत्वाज्जीवः कर्मणो योग्यान्पुद्गलानादत्ते । ३ स बन्धः । ४ प्रकृति-स्थित्यनुभावप्रदेशास्तद्विधयः । ५ आद्योज्ञान-दर्शनावरण-वेदनीय-मोहनीयायुष्क-नाम-गोत्रा-न्तरायाः । ६ पंचनवद्व्यष्टाविंशतिचतुर्द्विचत्वा-रिंशद्द्विपंचभेदा यथाक्रमम् । ७ मत्यादीनाम् । ८ चक्षुरचक्षुरवधिकेवलानां निद्रानिद्रानिद्राप्रच-

लाप्रचलाप्रचलास्त्यानगृद्धिवेदनीयानि च । ९ सदसद्वेद्ये । १० दर्शनचारित्रमोहनीय कषायनोकषायवेदनीयाख्यास्त्रिद्विषोडशनवभेदाः सम्यक्त्वमिथ्यात्वतदुभयानि कषायनोकषायावनन्तानुबन्ध्यप्रत्याख्यानावरणसंज्वलनविकल्पाश्चैकशः क्रोधमानमायालोभाः हास्यरत्यरतिशोकभयजुगुप्सास्त्रीपुंनपुंसकवेदाः । ११ नारकतैर्यग्योनमानुषदैवानि । १२ गतिजातिशरीरांगोपांगनिर्माणबन्धनसंघातसंस्थानसहनन–स्पर्शरसगन्धवर्णानु–पूर्व्यगुरुलघूपघातपराघातातपोद्योतोच्छ्वासवि--हायोगतयः प्रत्येकशरीरत्रससुभगसुस्वरशुभसूक्ष्मपर्याप्तस्थिरादेययशांसि सेतराणि तीर्थंकृत्त्वं च । १३ उच्चैर्नीचैश्च । १४ दानादीनाम् । १५ आदितस्तिसृणामन्तरायस्य च त्रिंशत्सागरोपमकोटीकोट्यः परा स्थितिः । १६ सप्ततिर्मोहनीयस्य । १७ नामगोत्रयोर्विंशतिः । १८ त्रयस्त्रिंशत्सागरोपमाण्यायुष्कस्य । १९ अपरा द्वादशमुहूर्त्ता

वेदनीयस्य । २० नामगोत्रयोरष्टौ । २१ शेषाणा-
मन्तर्मुहूर्तम् । २२ विपाकोऽनुभावः । २३ स
यथानाम । २४ ततश्च निर्जरा । २५ नामप्रत्य-
याः सर्वतो योगविशेषात्सूक्ष्मैकक्षेत्रावगाढस्थिताः
सर्वात्मप्रदेशेष्वनन्तानन्तप्रदेशाः । २६ सद्वेद्य-
सम्यक्त्वहास्य-रति-पुरुषवेद-शुभायु-र्नामगोत्राणि
पुण्यम् ।



## ❀ अथ नवमोऽध्यायः ❀

१ आस्रवनिरोधः संवरः । २ स गुप्तिसमिति-
धर्मानुप्रेक्षापरीषहजयचारित्रैः । ३ तपसा निर्जरा
च । ४ सम्यग्योगनिग्रहो गुप्तिः । ५ इर्याभाषैष-
णादाननिक्षेपोत्सर्गाः समितयः । ६ उत्तमः क्षमा-
मार्दवार्जवशौचसत्यसंयमतपस्त्यागाकिंचन्यब्रह्म-
चर्याणि धर्मः । ७ अनित्याशरणसंसारैकत्वान्य-

त्वाशुचित्वास्रवसंवरनिर्जरालोकवोधिदुर्लभधर्मस्वाख्याततत्त्वानुचिन्तनमनुप्रेक्षाः । ८ मार्गाच्यवननिर्जरार्थं परिषोढव्याः परीषहाः । ९ क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्यानिषद्याशय्याऽऽक्नोशवधयाचनाऽलाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाऽज्ञानादर्शनानि । १० सूक्ष्मसंयरायच्छद्मरथवीतरागयोश्चतुर्दश । ११ एकादश जिने । १२ वादरसंपराये सर्वे । १३ ज्ञानावरणे प्रज्ञाऽज्ञाने । १४ दर्शनमोहान्तराययोरदर्शनालाभौ । १५ चारित्रमोहे नाग्न्यारतिस्त्रीनिषद्याऽऽक्नोशयाचनासत्कारपुरस्काराः । १६ वेदनीये शेषाः । १७ एकादयो भाज्या युगपदेकोनविंशतेः । १८ सामायिकच्छेदोपस्थाप्यपरिहारविशुद्धि-सूक्ष्मसंपराय यथाख्यातानि चारित्रम् । १९ अनशनावमौदर्य-वृत्तिपरिसंख्यानरसपरित्यागविविक्तशय्यासन-कायक्लेशा बाह्यं तपः । २० प्रायश्चित्त-विनय-वैयावृत्त्य स्वा-

ध्याय-व्युत्सर्गध्यानान्युत्तरम् । २१ नवचतुर्दश-पचद्विभेद यथाक्रम प्राग्ध्यानात् । २२ आलोचन-प्रतिक्रमण-तदुभय-विवेक-व्युत्सर्ग-तपश्छेद-परिहारोपस्थापनानि । २३ ज्ञानदर्शनचारित्रोपचारा । २४ आचार्योपाध्याय-तपस्वि शैक्षकग्लान-गण कुल सघ साधु समनोज्ञानाम् । २५ वाचना-पृच्छनाऽनुप्रेक्षाऽऽम्नाय धर्मोपदेशा । २६ वाह्याभ्यन्तरोपध्यो । २७ उत्तमसहननस्यैकाग्रचिन्तानिरोधो ध्यानम् । २८ आमुहूर्तात् । २९ आर्त्तरौद्रधर्म्यशुक्लानि । ३० परे मोक्षहेतू । ३१ आर्तममनोज्ञाना सम्प्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहार । ३२ वेदनायाश्च । ३३ विपरीत मनोज्ञानाम् । ३४ निदान च । ३५ तदविरतदेशविरतप्रमत्तसयतानाम् । ३६ हिंसाऽनृत-स्तेय-विषयसरक्षणेभ्यो रौद्रमविरतदेशविरतयो । ३७ आज्ञा ऽपाय-विपाक सस्थान-विचयाय धर्म्मम-प्रमत्तसयतस्य । ३८ उपशान्तक्षीणकषाययोश्च ।

३९ शुक्ले चाद्ये । ४० परे केवलिनः । ४१ पृथक्त्वैकत्ववितर्क–सूक्ष्मक्रियाऽप्रतिपाति व्युपरतक्रियानिवृत्तीनि । ४२ तत्त्र्येककाययोगायोगानाम् । ४३ एकाश्रये सवितर्के पूर्वे । ४४ अविचारं द्वितीयम् । ४५ वितर्कः श्रुतम् । ४६ विचारोऽर्थव्यंजनयोगसंक्रान्तिः । ४७ सम्यग्दृष्टि-श्रावक-विरतानन्तवियोजक–दर्शनमोहक्षपकोपशमकोपशान्तमोहक्षपक–क्षीणमोह–जिनाः क्रमशोऽसंख्येयगुणनिर्जराः । ४८ पुलाक–बकुश कुशील-निर्ग्रन्थ-स्नातका निर्ग्रन्थाः । ४९ संयम श्रुत–प्रतिसेवना–तीर्थ–लिंगलेश्योपपात-स्थान–विकल्पतः साध्याः ।



## ॐ अथ दशमोऽध्यायः ॐ

१ मोहक्षयाद् ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलम् । २ बन्धहेत्वभावनिर्जराभ्याम् ।

३ कृत्स्नकर्मक्षयो मोक्षः । ४ औपशमिकादिभव्यत्वाभावाच्चान्यत्र केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्य । ५ तदनन्तरमूर्ध्वं गच्छत्यालोकान्तात् । ६ पूर्वप्रयोगादसगत्वाद् बन्धच्छेदात्तथागतिपरिणामाच्च तद्गति । ७ क्षेत्र काल-गति-लिंग तीर्थ-चारित्र प्रत्येकबुद्धबोधितज्ञानावगाहनान्तर—सख्याल्पबहुत्वत साध्या ।



श्रुतकेवलिश्रीशय्यम्भवसूरिसदृब्ध

## श्री दशवैकालिकसूत्र मूलपाठः



### १ द्रुमपुष्पिकाध्ययनम्

धम्मो मगलमुक्किट्ठ, अहिंसा सजमो तवो ।
देवा वि त नमसति, जस्स धम्मे सया मणो ।१।

जहा दुमस्स पुप्फेसु, भमरो आवियइ रसं ।
ण य पुप्फं किलामेइ, सो अ पीणेइ अप्पयं ।२।
एमेए समणा मुत्ता, जे लोए संति साहुणो ।
विहंगमा व पुप्फेसु, दाणभत्तेसणे रया ।३।
वयं च वित्ति लब्भामो, न य कोइ उवहम्मइ ।
अहागडेसु रीयंते, पुप्फेसु भमरा जहा ।४।
महुकारसमा बुद्धा, जे भवंति अणिस्सिया ।
नाणापिंडरया दंता, तेण वुच्चंति साहुणो,
त्तिबेमि ।५।

[इइ दुमपुप्फियनामपढमं अज्झयणं सम्मत्तं]



## २ श्रामण्यपूर्विकाध्ययनम्

कहं नु कुज्जा सामण्णं, जो कामे न निवारए ।
पए पए विसीअंतो, संकप्पस्स वसं गओ ।१।

वत्थगधमलकार, इत्थीओ सयणाणि अ ।
अच्छंदा जे न भुंजंति, न से चाइत्ति वुच्चइ ।२।
जे अ कंते पिए भोए, लद्धे वि पिट्ठि कुव्वइ ।
साहीणे चयइ भोए, से हु चाइ त्ति वुच्चइ ।३।
समाइ पेहाइ परिव्वयतो,
सिआ मणो निस्सरइ बहिद्धा ।
न सा महं नोवि अहंपि तीसे,
इच्चेव ताओ विणइज्ज राग ।४।
आयावयाही, चय सोगमल्ल,
कामे कमाही कमिअ खु दुक्ख ।
छिंदाही दोस, विणइज्ज राग,
एव सुही, होहिसि सपराए ।५।
पक्खंदे जलिअं जोइं, धूमकेउं दुरासयं ।
नेच्छंति वंतयं भोत्तुं, कुले जाया अगंधणे ।६।
धिरत्थु तेऽजसोकामी, जो तं जीवियकारणा ।
वंतं इच्छसि आवेउं, सेयं ते मरणं भवे ।७।

अहं च भोगरायस्स, तं च सि अंधगवण्हिणा ।
मा कुले गंधणा होमो, संजमं निहुओ चर ।८।

जइ तं काहिसि भावं, जा जा दिच्छसि नारीओ ।
वायाविद्धुव्व हडो, अट्ठिअप्पा भविस्ससि ।९।

तीसे सो वयणं सोच्चा, संजयाई सुभासियं ।
अंकुसेण जहा नागो, धम्मे संपडिवाइओ ।१०।

एवं करंति संबुद्धा, पंडिया पवियक्खणा ।
विणिअट्टंति भोगेसु, जहा से पुरिसुत्तमो,
त्तिबेमि ।११।

[इइ सामन्नपुव्वियनाम वीयं अज्झयणं सम्मत्तं]

❀ ❀

## ३ क्षुल्लकाचाराध्ययनम्

( अनुष्टुब्वृत्तम् )

सजमे सुट्ठियप्पाण, विप्पमुक्काण ताइण ।
तेसिमेअमणाइन्न, निग्गथाण महेसिण ।१।
उद्देसिय कीयगड, नियाग-मभिहडाणि य ।
राइभत्ते सिणाणे य, गधमल्ले य वीयणे ।२।
सनिही गिहिमत्ते अ, रायपिंडे किमिच्छए ।
सवाहणादतपहोयणा अ, सपुच्छणा
देहपलोयणा अ ।३।
अट्ठावए अ नालीए, छत्तस्स य धारणट्ठाए ।
तेगिच्छ पाहणायाए, समारभ य जोइणो ।४।
सिज्जायरपिंड च, आसदी-पलिअकए ।
गिहतरनिसिज्जा य, गायस्सुवट्टणाणि य ।५।
गिहिणो वेआवडिय, जा य आजीववत्तिया ।
तत्ता निव्वुडभोइत्त, आउरस्सरणाणि य ।६।

मूलए सिंगबेरे य, उच्छुखंडे अनिव्वुडे ।
कंदे मूले य सच्चित्ते, फले बीए य आमए ।७।

सोवच्चले सिंधवे लोणे, रोमालोणे य आमए ।
सामुद्दे पंसुखारे य, कालालोणे य आमए ।८।

धुवणे त्ति वमणे अ, वत्थीकम्म-विरेयणे ।
अंजणे दंतवणे अ, गायाब्भंग-विभूसणे ।६।

सव्वमेयमणाइन्नं, निग्गंथाण महेसिणं ।
संजमंमि अ जुत्ताणं, लहुभूयविहारिणं ।१०।

पंचासवपरिण्णाया, तिगुत्ता छसु संजया ।
पंचनिग्गहणा धीरा, निग्गंथा उज्जुदंसिणो ।११।

आयावयंति गिम्हेसु, हेमंतेसु अवाउडा ।
वासासु पडिसंलीणा, संजया सुसमाहिया ।१२।

परीसह-रिऊ-दंता, धूअमोहा जिइंदिआ ।
सव्वदुक्ख-प्पहीणट्ठा, पक्कमंति महेसिणो ।१३।

तुक्कराइं करित्ताण, दुस्सहाइं सहेत्तु अ ।
केइत्थ देवलोएसु, केइ सिज्झति नीरया ॥१४॥
खवित्ता पुव्वकम्माइ, सजमेण तवेण य ।
सिद्धिमग्गमणुप्पत्ता, ताइणो परिनिव्वुडे
तिबेमि ॥१५॥

[ इइ खुड्डियायारकहानाम तइय
अज्झयण सम्मत्त ]

**

## ४ छज्जीवणियज्झयणं [ गद्यम् ]

सुअ मे आउस ! तेण भगवया एव-मक्खायं । इह खलु छज्जीवणिआनामज्झयण समणेण भगवया । महावीरेण कासवेण पवेइआ, सुअ-क्खाया, सुपन्नत्ता, सेअ मे अहिज्जिउ अज्झयण धम्मपन्नत्ती ॥१॥ कयरा खलु सा छज्जीवणिआ नामज्झयण, समणेण भगवया महावीण । कास-वेण पवेइआ, सुअक्खाया सुपन्नत्ती, सेअ मे अहि-

ज्जिउं अज्झयणं धम्मपन्नत्ती ।।२।। इमा खलु सा छज्जीवणिआ नामज्झयणं, समणेणं भगवया महावीरेणं कासवेण पवेइआ, सुअक्खाया सुपन्नत्ता, सेअं मे अहिज्जिउं अज्झयणं धम्मपन्नत्ती ।।३।। तं जहा पुढविकाइआ आउकाइआ, तेउकाइआ, वाउकाइआ, वणस्सइकाइआ तस-काइआ ।।४।। पुढवी चित्तमतमक्खाया, अणेग-जीवा, पुढोसत्ता, अन्नत्थ सत्थपरिणएणं ।।५।। आउ चित्तमतमक्खाया, अणेगजीवा । पुढोसत्ता, अन्नत्थ सत्थपरिणएणं ।। ६ ।। तेउ चित्तमंत-मक्खाया अणेगजीवा । पुढोसत्ता, अन्नत्थ सत्थ-परिणएणं ।।७।। वाउ चित्तमतमक्खाया अणेग-जीवा । पुढोसत्ता, अन्नत्थ सत्थपरिणएणं ।। ८ ।। वणस्सई चित्तमंतमक्खाया अणेगजीवा । पुढो-सत्ता, अन्नत्थ सत्थपरिणएणं ।। ९ ।। त जहा अग्गबीआ, मूलबीआ, पोरबीआ, खंधबीआ, बीअरुहा, संमुच्छिमा तणलया, वणस्सइकाइआ

॥१०॥ सचीत्रा, चित्तमतमक्खाया अणेगजीवा । पुढासत्ता, अन्नत्थ सत्थपरिणएण ॥११॥

से जे पुण इमे अणेगे बहवे तसा पाणा, त जहा—अडया पोयया जराउआ रसया ससेइमा समुच्छिमा उब्भिआ उववाइआ, जेसिं केसिं चि पाणाण अभिक्कत पडिक्कत सकुचिअ पसारिअ रुअ भत तसिअ पलाइअ आगइगइविन्नाया जे अ कीडपयगा, जा य कुथुपिपीलिआ, सव्वे बेइदिआ, सव्वे तेइदिआ, सव्वे चउरिंदिआ, सव्वे पचिंदिआ सव्वे तिरिक्खजोणिआ, सव्वे नेरइआ, सव्वे मणुआ, सव्वे देवा, सव्वे पाणा परमाहम्मिआ एसो खलु छट्ठो जीवनिकाओ तसकाउ त्ति, पवुच्चइ ( सूत्र० १ )

इच्चेसिं छण्ह जीवनिकायाण नेव सय दड समारभिज्जा, नेवन्नेहिं दड समारभाविज्जा, दड समारभते वि अन्ने न समणुजाणामि, जाव-

ज्जीवाए तिविहं तिविहेण मणेणं वायाए काएणं न करेमि न कारवेमि. करतं पि अन्नं न समणु-जाणामि तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ( सूत्र० २ )

पढमे भंते महव्वए पाणाइवायाओ वेरमणं, सव्वं भते ! पाणाइवायं पच्चक्खामि, से सुहुम वा बायर वा, तसं वा थावरं वा, नेव सय पाणे अइवाइज्जा, नेवन्नेहिं पाणे अइवायाविज्जा, पाणे अइवायंते वि अन्ने न समणुजाणामि; जावज्जीवाए तिविह तिविहेण मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अन्नं न समणुजाणामि, तस्स भते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि. पढमे भंते ! महव्वए उवट्ठिओमि सव्वाओ पाणाइवायाओ वेरमणं १ ( सूत्र० ३ )

अहावरे दुच्चे भते ! महव्वए मुसावायाओ वेरमणं, सव्वं भंते ! मुसावायं पच्चक्खामि से

कोहा वा, लोहा वा, भया वा, हासा वा, नेव सय मुस वइज्जा नेवऽन्नेहिं मुस वायाविज्जा, मुसं वयते वि अन्ने न समणुजाणामि, जावज्जीवाए तिविह तिविहेण मणेण वायाए काएण न करेमि न कारवेमि करत पि अन्न न समणुजाणामि तस्स भते ! पडिक्कमामि निंदामि गरिहामि अप्पाण वोसिरामि दुच्चे भते ! महव्वए उवट्ठिओमि सव्वाओमुसावायाओ वेरमण । २ ( सूत्र० ४ )

अहावरे तच्चे भते ! महव्वए अदिन्नादाणाओ वेरमण, सव्व भते ! अदिन्नादाण पचक्खामि, से गामे वा नगरे वा रण्णे वा अप्प वा बहु वा अणु वा थूल वा चित्तमत वा अचित्तमत वा नेव सय अदिन्न गिण्हिज्जा नेवऽन्नेहिं अदिन्न गिण्हाविज्जा, अदिन्न गिण्हतेवि अन्ने न समणुजाणामि, जावज्जीवाए तिविह तिविहेण मणेण वायाए काएण न करेमि न कारवेमि

करंतं पि अन्नं न समणुजाणामि, तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि, तच्चे भंते ! महव्वए उवट्ठिओमि, सव्वाओ अदिन्नादाणाओ वेरमणं । ३ ( सूत्र० ५ )

अहावरे चउत्थे भंते ! महव्वए मेहुणाओ वेरमणं, सव्वं भंते ! मेहुणं पच्चक्खामि, से दिव्वं वा माणुसं वा तिरिक्खजोणिअं वा नेव सयं मेहुणं सेविज्जा, नेवन्नेहिं मेहुणं सेवाविज्जा, मेहुणं सेवंते वि अन्ने न समणुजाणामि, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अन्नं न समणुजाणामि, तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि, चउत्थे भंते ! महव्वए उवट्ठिओमि, सव्वाओ मेहुणाओ वेरमणं । ४ ( सू० ६ )

अहावरे पंचमे भंते ! महव्वए परिग्गहाओ वेरमणं, सव्वं भंते ! परिग्गहं पच्चक्खामि, से

अप्प वा बहु वा अणु वा थूल वा चित्तमत वा अचित्तमत वा नेव सय परिग्गह परिगिण्हिज्जा नेवऽन्नेहिं परिग्गह परिगिण्हाविज्जा, परिग्गह परिगिण्हते वि अन्ने न समणुजाणामि जावज्जीवाए तिविह तिविहेण मणेण वायाए काएणं न करेमि न कारवेमि करत पि अन्न न समणुजाणामि, तस्स भते ! पडिक्कमामि निंदामि गरिहामि अप्पाण वोसिरामि ! पचमे भते ! महव्वए उवट्ठिओमि, सव्वाओ परिग्गहाओ वेरमण । ४ ( सू० ७ )

अहावरे छट्ठे भते ! वए राइभोयणाओ वेरमण, सव्व भते ! राइभोयण पच्चक्खामि, से असण वा पाण वा खाइम साइम वा नेव सय राइ भु जिज्जा, नेवऽन्नेहिं राइ भु जाविज्जा राइ भु जते वि अन्ने न समणुजाणामि, जावज्जीवाए तिविह तिविहेण मणेण वायाए काएण न करेमि न कारवेमि करतपि अन्न न समणु-

जाणामि, तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि. छट्ठे भंते ! वए उवट्ठिओमि, सव्वाओ राइभोयणाओ वेरमणं। ६ (सूत्र० ८) इच्चेयाइं पंच महव्वयाइं राइ-भोअणवेरमणछट्ठाइं अत्तहियट्ठयाए उवसंपज्जित्ताणं विहरामि। (सू० ९)

से भिक्खू वा भिक्खुणी वा संजयविरय-पडिहयपच्चक्खायपावकम्मे दिआ वा राओ वा, एगओ वा परिसागओ वा, सुत्ते वा जागरमाणे वा, से पुढविं वा, भित्तिं वा, सिलं वा लेलुं वा, ससरक्खं वा कायं, ससरक्खं वा वत्थं, हत्थेण वा, पाएण वा, कट्ठेण वा किलिंचेण वा अंगुलिआए वा, सिलागाए वा, सिलागहत्थेण वा, न आलिहिज्जा न विलिहिज्जा न घट्टिज्जा न भिंदिज्जा अन्नं न आलिहाविज्जा न विलिहाविज्जा न घट्टाविज्जा न भिंदाविज्जा, अन्नं आलिहंतं वा विलिहंतं वा घट्टंतं वा भिंदंतं वा

न समणुजाणामि, जावज्जीवाए तिविहं तिविहेण मणेण वायाए काएण न करेमि न कारवेमि करतं पि अन्न न समणुजाणामि, तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि। ( सू० १० )

से भिक्खू वा भिक्खुणी वा संजयविरयपडिहयपच्चक्खायपावकम्मे दिश्रा वा राश्रो वा, एगश्रो वा परिसागश्रो वा सुत्ते वा जागरमाणे वा, से उदग वा श्रोस वा हिमं वा महिअं वा हरतणुगं वा सुद्धोदगं वा उदउल्लं वा कायं उदउल्लं वा वत्थं ससिणिद्धं वा कायं ससिणिद्धं वा वत्थं न आमुसिज्जा न संफुसिज्जा, न आवीलिज्जा न पवीलिज्जा न अक्खोडिज्जा, न पक्खोडिज्जा, न आयाविज्जा, न पयाविज्जा अन्नं न आमुसाविज्जा न संफुसाविज्जा, न आवीलाविज्जा न पवीलाविज्जा, न अक्खोडाविज्जा न पक्खोडाविज्जा, न आयाविज्जा न पयाविज्जा, अन्नं न

आमुसाविज्जा न संफुसाविज्जा, न आवीलाविज्जा न पवीलाविज्जा. न अक्खोडाविज्जा न पक्खोडाविज्जा, न आयाविज्जा न पयाविज्जा, अन्नं आमुसंतं वा संफुसंतं वा, आवीलंत वा पवीलत्तं वा, अक्खोडंत वा पक्खोडंतं वा, आयारतं वा, पयावंतं वा, न समणुजाणामि जावज्जीवाए तिविहं निविहेणं, मणेणं वायाए काएण, न करेमि न कारवेमि करंतपि अन्नं न समणुजणामि, तस्स भने ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि २ ( सूत्र० ११ )

से भिक्खू वा भिक्खुणी वा, संजयविरयपडिहयपच्चक्खायपावकम्मे दिआ वा राओ वा, एगओ वा परिसागओ वा, सुत्ते वा जागरमाणे वा, से अगणि वा इंगालं वा मूम्मुरं वा अच्चिं वा जालं वा अलायं वा सुद्धागणि वा उक्कं वा न उजेज्जा न घट्टेज्जा, न भिदेज्जा, न उज्जालेज्जा, न पज्जालेज्जा, न निव्वावेज्जा, अन्नं न

उजावेज्जा न घट्टावेज्जा न भिंदाविज्जा न उज्जालाविज्जा (न पज्जालाविज्जा) न निव्वाविज्जा, अन्न उजत वा घट्ट त वा, (भिंदत वा,) उज्जालत वा, (पज्जालत वा) निव्वावत वा न समणुजाणामि, जावज्जीवाए तिविह तिविहेण मणेण वायाए काएण न करेमि न कारवेमि करत पि अन्न न समणुजाणामि, तस्स भते ! पडिक्कमामि, निंदामि गरिहामि अ पाण वोसिरामि ३(सू॰ १२)

से भिक्खू वा भिक्खुणी वा, सजयविरयपडिहयपच्चक्खायपावकम्मे, दिआ वा, राओ वा, एगओ वा, परिसागओ वा, सुत्ते वा जागरमाणे वा, से सिएण वा, विहुयणेण वा, तालिअटेण वा, पत्तेण वा, पत्तभगेण वा, साहाए वा, साहाभगेण वा, पिहुणेण वा, पिहुणहत्थेण वा, चेलेण वा, चेलकण्णेण वा, हत्थेण वा, मुहेण वा, अप्पणो वा काय, बाहिर वावि पुग्गल, न फुमेज्जा, न वीएज्जा, अन्न न फुमावेज्जा न वीआवेज्जा,

अन्नं फुमंत वा वीअंतं वा न समणुजाणामि, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अन्नं न समणुजाणामि तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ४ ( सूत्र० १३ )

से भिक्खू वा भिक्खूणी वा संजयविरय-पडिहयपच्चक्खायपावकम्मे, दिआ वा, राओ वा, एगओ वा, परिसागओ वा, सुत्ते वा, जागरमाणे वा, से बीएसु वा बीअपइट्ठेसु वा रूढेसु वा, रूढपइट्ठेसु वा, जाएसु वा, जायपइट्ठेसु वा, हरिएसु वा, हरिअपइट्ठेसु वा, छिन्नेसु वा, छिन्नपइट्टेसु वा, सचित्तेसु वा, सचित्तकोलप-डिनिस्सिएसु वा, न गच्छेज्जा, न चिट्ठेज्जा, न निसीएज्जा, न तुअट्टेज्जा, अन्नं न गच्छावेज्जा, न चिट्ठावेज्जा, न निसीआवेज्जा, न तुअट्टावेज्जा, अन्नं गच्छंतं वा, चिट्ठंतं वा, निसीयंतं वा, तुयट्टंतं वा, न समणुजाणामि, जावज्जीवाए

तिविहं तिविहेण मणेण वायाए काएण न करेमि न कारवेमि, करत पि अन्न न समणुजाणामि, तस्स भते ! पडिक्कमामि निंदामि गरिहामि अप्पाण वोसिरामि ५ ( सूत्र० १४ )

से भिक्खू वा भिक्खूणी वा सजयविरय-पडिहयपच्चक्खायपावकम्मे, दिया वा राओ वा, एगओ वा, परिसागओ वा, सुत्ते वा, जागरमाणे वा, से कीड वा पयग वा, कुथु वा पिपीलिअं वा, हत्थसि वा, पायसि वा, बाहुसि वा, ऊरु सि वा उदरसि वा सीससि वा वत्थसि वा, पडिग-हसि वा, कबलसि वा, पायपु छणसि वा रयहर-णसि वा गोच्छगसि वा, उडगसि वा, दडगसि वा, पीढगसि वा, फलगसि वा, सेज्जसि वा, सथारगसि वा, अन्नयरसि वा, तहप्पगारे उवगर-णजाए तओ सजयामेव पडिलेहिअ पडिलेहिअ, पमज्जिअ पमज्जिअ, एगतमवणेज्जा नो सघा-यमावज्जिज्जा ६ ( सूत्र० १५ ।

अजयं चरमाणो अ, पाणभूयाइं हिंसइ।
बंधइ पावयं कम्मं, तं से होइ कडुअं फलं ॥१॥

अजयं चिट्ठमाणो अ, पाणभूयाइं हिंसइ।
बंधइ पावयं कम्मं, तं से होइ कडुअं फलं ॥२॥

अजयं चिट्ठमाणो अ, पाणभूयाइं हिंसइ।
बंधइ पावयं कम्मं, तं से होइ कडुअं फलं ॥३॥

अजयं सयमाणो अ, पाणभूयाइं हिंसइ।
बंधइ पावयं कम्मं, तं से होइ कडुअं फलं ॥४॥

अजयं भुंजमाणो अ, पाणभूयाइं हिंसइ।
बंधइ पावयं कम्मं तं से होइ कडुअं फलं ॥५॥

अजयं भासमाणो अ, पाणभूयाइं हिंसइ।
बंधइ पावयं कम्मं, तं से होइ कडुअं फलं ॥६॥

कहं चरे ? कहं चिट्ठे ? कहमासे ? कहं सए।
कहं भुंजंतो ? भासंतो ?, पावं कम्मं न बंधइ ॥●
जयं चरे जयं चिट्ठे जयमासे जयं सए।
जयं भुंजंतो भासंतो, पावं कम्मं न बंधइ ॥८॥

सव्वभूयप्पभूग्रस्स, सम्म भूयाइ पासश्रो ।
पिहिग्रासवस्स दतस्स, पावकम्म न बधइ ॥६॥
पढम नाण तयो दया, एव चिट्ठइ सव्वसजए ।
अन्नाणी किं काही ?, किं वा नाहीइ सेग्रपावग ? १०
सोच्चा जाणइ कल्लाण, सोच्चा जाणइ पावग ।
उभय पि जाणइ सोच्चा, ज सेअ त समायरे ॥११॥
जो जीवे वि न याणेइ, अजीवे वि न याणइ ।
जीवा-जीवे अयाणतो, कह सो नाहीइ सजम ॥१२॥
जो जीवे वि वियाणेइ, अजीवे वि वियाणइ ।
जीवाजीवे वियाणतो, सो हु नाहीइ सजम ॥१३॥
जया जीवमजीवे य, दो वि एए वियाणइ ।
तया गइ बहुविह सव्व जीवाण जाणइ ॥१४॥
जया गइ बहुविह, सव्वजीवाण जाणइ ।
तया पुण्ण च पाव च, बध मुक्ख च जाणइ ॥१५॥
जया पुण्ण च पाव च, बध मुक्ख च जाणइ ।
तया निव्विदए भोए, जे दिव्वे जे अ माणुसे ॥१६॥

जया निव्विदए भोए, जे दिव्वे जे अ माणुसे ।
तया चयइ संजोगं, सब्भिंतरबाहिरं ॥१७॥
जया चयइ संजोगं, सब्भिंतरबाहिरं ।
तया मुंडे भवित्ताणं, पव्वइए अणगारिअं ॥१८॥
जया मुंडे भवित्ताणं पव्वइए अणगारिअं ।
तया संवरमुक्किट्ठं, धम्मं फासे अणुत्तरं ॥१९॥
जया संवरमुक्किट्ठं, धम्मं फासे अणुत्तरं ।
तया धुणइ कम्मरयं, अबोहिकलुसं कडं ॥२०॥
जया धुणइ कम्मरयं, अबोहिकलुसं कडं ।
तया सव्वत्तगं नाणं, दंसणं चाभिगच्छइ ॥२१॥
जया सव्वत्तगं नाणं, दंसणं चाभिगच्छइ ।
तया लोगमलोगं च, जिणो जाणइ केवली ॥२२॥
जया लोगमलोगं च, जिणो जाणइ केवली ।
तया जोगे निरुंभित्ता, सेलेसिं पडिवज्जइ ॥२३॥
जया जोगे निरुंभित्ता, सेलेसिं पडिवज्जइ ।
तया कम्मं खवित्ताणं, सिद्धिं गच्छइ नीरओ ॥२४॥

जया कम्म खवित्ताण, सिद्धि गच्छइ नीरश्रो ।
तया लोगमत्थयत्थो, सिद्धो हवइ सासश्रो ।।२५।।
सुहसायगस्स समणस्स सायाउलगस्स निगामसाइस्स
उच्छोलणापहोअस्स, दुल्लहा सुगइ तारिसगस्स ।२६
तवोगुणपहाणस्स, उज्जुमइ खतिसजमरयस्स ।
परीसहे जिणतस्स, सुलहा सुगइ तारिसगस्स ।।२७
पच्छा वि ते पयाया, खिप्प गच्छति अमरभवणाइ ।
जेसि पिश्रो तवो सजमो अ, खति अ बभचेर च ।।२८।
इच्चेअ छज्जीवणिअ, सम्मद्दिट्ठी सया जए ।
दुल्लह लहित्तु सामन्न, कम्मुणा न विराहेज्जासि
त्तिबेमि ।।२६।।

इइ चउत्थ छज्जीवणिश्रानामज्झयण समत्तं ।। ४

—:*:—

अथपंचमज्झयणं—

## पिण्डेसणाए पढमो उद्देसओ.

संपत्ते भिक्खकालम्मि, असंभंतो अमुच्छिओ ।
इमेण कम्मजोगेण, भत्तपाणं गवेसए ॥१॥
से गामे वा नगरे वा, गोअरग्गगओ मुणी ।
चरे मंदमणुव्विग्गो, अव्वक्खित्तेण चेअसा ॥२॥
पुरओ जुगमायाए, पेहमाणो महिं चरे ।
वज्जंतो बीअहरिआइं, पाणे अ दगमट्टिअं ॥३॥
ओवायं विसमं खाणुं, विजलं परिवज्जए ।
संकमेण न गच्छेज्जा, विज्जमाणे परक्कमे ॥४॥
पवडते व से तत्थ, पक्खलते व संजए ।
हिंसेज्ज पाणभूआइं, तसे अदुव थावरे ॥५॥
तम्हा तेण न गच्छिज्जा, संजए सुसमाहिए ।
सइ अन्नेण मग्गेण, जयमेव परक्कमे ॥६॥
इंगालं छारिअं रासिं, तुसरासिं च गोमयं ।
ससरक्खेहिं पाएहिं, संजओ तं नइक्कमे ॥७॥

न चरेज्ज वासे वासते, महिआए व पडतिए ।
महावाए व वायते, तिरिच्छसपाइमेसु वा ॥८॥
न चरेज्ज वेससामते, बंभचेरवसाणुए ।
बंभयारिस्स दंतस्स, हुज्जा तत्थ विसोत्तिआ॥ ९॥
अणायणे चरंतस्स, संसग्गीए अभिक्खणं ।
हुज्ज वयाणं पीला, सामन्नंमि अ संसओ ॥१०॥
तम्हा एअं विआणित्ता, दोसं दुग्गइवड्ढणं ।
वज्जए वेससामंतं, मुणी एगंतमस्सिए ॥११॥
साणं सूयं गाविं, दित्तं गोणं हयं गयं ।
संडिब्भं कलहं जुद्धं, दूरओ परिवज्जए ॥१२॥
अणुन्नए नावणए, अप्पहिट्ठे अणाउले ।
इंदिआइं जहाभागं, दमइत्ता मुणी चरे ॥१३॥
दवदवस्स न गच्छेज्जा, भासमाणो अ गोअरे ।
हसंतो नाभिगच्छिज्जा, कुलं उच्चावयं सया ॥१४
आलोअं थिग्गलं दारं, संधिं दगभवणाणि अ ।
चरंतो न विणिज्झाए, संकट्ठाणं विवज्जए ॥१५॥

